श्रीमच्छंकराचार्यप्रणीतभाष्योपेतम्

# विष्णुसहस्रनामस्तोत्रम्.



सुकठणकरोपाव्ह भवानीशंकर शर्म्मणा

संशोधितम्

तच

पंडित–ज्येष्ठाराम मुकुंदजी सूनुना

विठ्ठलप्रसादशर्म्मणा

'नेटिव ओपिनियन' मुद्रणालये मुद्रापितम्

शके १८३२ सन १९१०

मूल्यं १० कलाः

# अनुक्रमणिका.



---

इति अनुक्रमणिका समाप्ता

# श्रीमद्भाष्यकृता प्रामाण्येनोपन्यस्तानां ग्रन्थानां ग्रंथकृतां च नामनिर्देशः ।

अग्निपुराणम्
अंतर्यामिब्राह्मणः
आत्मबोधोपनिषद्
आपस्तंबस्मृतिः
ईशावास्योपनिषद्
ऋग्वेदः
ऐतरेयोपनिषद्
कठोपनिषद्
कात्यायनः
केनोपनिषद्
छान्दोग्योपनिषद्
तैत्तिरीयोपनिषद्
धातुपाठः
नरसिंहपुराणम्
पद्मपुराणम्
पराशरः
पाणिनिव्याकरणम्
बृहदारण्यकोपनिषद्
ब्रह्मपुराणम्
ब्रह्मसूत्रम्

भगवद्गीता
भविष्योत्तरपुराणम्
मंडूकोपनिषद्
मनुस्मृतिः
महाभारतम्
बृहन्नारायणम्
मांडूक्योपनिषद्
यास्कः
लिंगपुराणम्
वाल्मीकिरामायणम्
विष्णुतिलकः
विष्णुधर्मः
विष्णुपुराणम्
वृद्धशातातपः
व्यासस्मृतिः
श्रीस्तुतिः
श्वेताश्वतरम्
सनत्कुमारः
स्वाध्यायब्राह्मणः
हरिवंशः

श्रीः

## श्रीमच्छांकरभाष्योपेतम् ।

# विष्णुसहस्रनामस्तोत्रम् ॥

श्रीगणेशायनमः । श्रीशौ जयतः । सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकर्मणे ॥ नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे॥ १ ॥ कृष्णद्वैपायनं वन्दे सर्वलोकहिते रतम् ॥ वेदाब्जभास्करं व्यासं शमादिनिलयं मुनिम् ॥ २ ॥ सहस्रमूर्तेः पुरुषोत्तमस्य सहस्रनेत्राननपादबाहोः ॥ सहस्रनाम्नां स्तवनं प्रशस्तं निरुच्यते जन्मजरादिशान्त्यै ॥ ३ ॥ वैशंपायनो जनमेजयमुवाच—

**श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ॥**
**युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥ १ ॥**

श्रुत्वेति । धर्मानभ्युदयनिःश्रेयसोत्पत्तिभूतान्वेदलक्षणानशेषेण कार्त्स्न्येन पावनानि पापक्षयकारणानि च सर्वशः सर्वप्रकारैः श्रुत्वा युधिष्ठिरो धर्मपुत्रः शान्तनवं शन्तनुसुतं भीष्मं सकलपुरुषार्थसाधनमल्पप्रयासमनल्पफलमनुक्तमितिकृत्वा पुनर्भूय एव अभ्यभाषत प्रश्नं कृतवान् ।

**किमेकं दैवतं लोके किं वाप्येकं परायणम् ॥**
**स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥ २ ॥**

किमिति । किमेकं दैवतं देव इत्यर्थः । स्वार्थे तद्धितविधानात् । लोके लोकनहेतुभूते समस्तविद्यास्थाने उक्तं पदाश्रया प्रवर्तन्ते सर्वे इति प्रथमः प्रश्नः । किंवाप्येकं परायणम् । अस्मिँल्लोके एकं परायणं किं परमयनं प्राप्तव्यं स्थानम् । यस्मिन्निरीक्षिते ' भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥ क्षीयन्ते

चास्य कर्माणि तस्मिन्दृष्टे परावरे । ' यस्य विज्ञानमात्रेण आनन्द लक्षणो मोक्षः प्राप्यते, यद्विद्वान्न बिभेति कुतश्चनेति, यत्प्रविष्टस्य न विद्यते पुनर्भवः यस्य च वेदनात्तदेव भवति, यद्विहायापरः पंथा नृणां नास्ति तदुक्तमेकं परायणं लोके किमिति द्वितीय प्रश्नः । कं कतमं देवं स्तुवन्तो गुणसंकीर्तनं कुर्वन्तः कं कतमं देवमर्चन्तः बाह्यमाभ्यन्तरं चार्चनं बहुविधं कुर्वन्तः मानवा मनुसुताः शुभं कल्याणं स्वर्गादिफलं प्राप्नुयुः लभेयुरिति पुनः प्रश्नद्वयम् ।

को धर्मः सर्वधर्माणां भवतः परमो मतः ॥
किं जपन्मुच्यते जन्तुर्जन्मसंसारबंधनात् ॥ ३॥

को धर्मः पूर्वोक्तलक्षणः सर्वेषां धर्माणां मध्ये भवतः परमः प्रकृष्टो मतः अभिमतः इति पञ्चमः प्रश्नः । किं जपन्नित्यादि किं जप्यं जपन् उच्चोपांशुमानसलक्षणं जपं कुर्वन् जन्तुः जनन धर्मा अनेन जन्तुशब्देन च जपार्चनादिषु यथायोग्यमधिकारं सूचयति । जन्मसंसारबन्धनात् जन्माज्ञान विजृंभितानामविद्याकार्याणामुपलक्षणम् । संसारोऽविद्या ताभ्यां यद्बन्धनं तस्मान्मुच्यते मुक्तो भवतीति षष्ठः प्रश्नः । ' जन्मसंसारबन्धनात् ' इतीद मुपलक्षणम् । इतरेषां फलानामप्येतद्ग्रहणं मोक्षस्य प्राधान्य स्थापनार्थम् ।

भीष्म उवाचमुवाच—

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ॥
स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः ॥ ४ ॥

सर्वेषां शत्रूणां भयहेतुर्भीष्मः । मोक्षधर्मादीनां प्रवक्ता सर्वज्ञः । किमेकमिति षट् प्रश्नाः कृताः तत्र पाश्चात्योऽनन्तरो जप्यविशेषस्य षष्ठः प्रश्नोऽनेन श्लोकेन परिह्रियते । जगत् स्थावरजङ्गमात्मकं

तस्य प्रभुं स्वामिनं देवदेवं देवानां देवम् अनन्तं देशतः कालतो वस्तुतश्चापरिच्छिन्नं पुरुषोत्तमं क्षराक्षराभ्यां कार्यकारणाभ्यामुत्कृष्टं नामसहस्रेण नाम्नां सहस्रेण स्तुवन् गुणान्संकीर्तयन् सततोत्थितः निरन्तरमुद्युक्तः पुरुषः पूर्णत्वात् पुरिशयत्वाद्वा पुरुष स च सर्वदुःखातिगो भवेदिति सर्वत्र सम्बध्यते ।

उत्तरेण श्लोकेन चतुर्थः प्रश्नः समाधीयते ।

तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ॥
ध्यायंस्तुवन्नमस्यंश्च यजमानस्तमेव च ॥ ५ ॥

तमेव च अर्चयन्बाह्यार्चनं कुर्वन् नित्यं सर्वेषु कालेषु भक्तिर्भजनं तात्पर्येण तया भक्त्या पुरुषमव्ययं विनाशक्रियारहितं ध्यायन् आभ्यन्तराभ्यर्चनं कुर्वन् स्तुवन् पूर्वोक्तेन । नमस्यन् नमस्कारं कुर्वन् पूजाशेषभूतमुभयं स्तुतिनमस्कारलक्षणं कुर्वन्यजमानः पूजकः फलभोक्ता अथवा अर्चयन्नित्यमनेनोभयविधमर्चनमुच्यते । ध्यायन्स्तुवन्नमस्यन्निति मानसं कायिकं वाचिकं चोच्यते

तृतीयं प्रश्नं परिहरति उत्तरैस्त्रिभि पादैः

अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ॥
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत्॥६॥

अनादिनिधन षड्भाववर्जितं विष्णुं व्यापनशीलं सर्वं लोक्यते इति लोको दृश्यवर्गः तस्य नियन्तॄणां ब्रह्मादीनामधीश्वरत्वात्सर्वलोकमहेश्वर॰ तं लोकं दृश्यवर्गं स्वाभाविकेन बोधेन साक्षात्पश्यतीति लोकाध्यक्षः नित्यं निरन्तरं स्तुवन्सर्वदुःखातिगो भवेदिति। त्रयाणां साधारणं फलवचनं सर्वाण्याध्यात्मिकादीनि दुःखान्यतीत्य गच्छतीति सर्वदुःखातिगो भवेत् स्यात् ।

तमेव स्तुत्यं विशिनष्टि

ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ॥
लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥ ७ ॥

ब्रह्मण्यमिति ब्रह्मणे (स्तुषे) ब्राह्मणाय तपसे श्रुतये हितम् ॥ सर्वान्धर्मोञ्जानातीति सर्वधर्मज्ञः तम् । लोकानां प्राणिनां कीर्ति॰ यशांसि स्वशक्त्यनुमवेशेन वर्धयतीति तम् । लोकैर्नाथ्यते याच्यते लोकानुपतापयते शास्ते लोकानामीष्ट इति वा लोकनाथः तं मह-द्भूत विश्वोत्कर्षेण विद्यमानत्वात् । भूतं परमार्थसत्यं सर्वभूतानां भवः संसारो यत्सकाशादुद्भवतीति सर्वभूतोद्भवस्तम् ।

पञ्चमं प्रश्नं परिहीयते—

एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ॥
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥ ८ ॥

एष इति । सर्वेषां वेदलक्षणानां धर्माणामेष वक्ष्यमाणो धर्मो ऽधिकतम इति मे मतोऽभिमेतः । यद्भक्त्या तात्पर्येण पुण्डरीकाक्षं हृदयपुण्डरीके प्रकाशमानं वासुदेवं स्तवैर्गुणसंकीर्तनलक्षणैः स्तुतिभिः सदार्चेत्सत्कारपूर्वकमर्चनं करोति नरो मनुष्य इति यत् एष धर्म इति सम्बन्धः । अस्य स्तुतिलक्षणस्यार्चनस्याधिक्ये किं॰ कारणमुच्यते । हिंसादिपुरुषान्तरद्रव्यदेशकालादिनियमान-पेक्षत्वाचाधिक्ये कारणम् । ' ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ॥ यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥ ' इति विष्णुपुराणे। 'जप्येनैव तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः॥कुर्यादन्यन्नवा कुर्यान्मैत्रो ब्राह्मण उच्यते । ' इति मानवं वचनमेतत्सर्व-मभिमेत्य ' एष मे सर्वधर्माणां धर्मोऽधिकतमो मत' इत्युक्तम् ।

द्वितीयं प्रश्नं समाधत्ते—

परमं यो महत्तेजः परमं यो महत्तपः ॥
परमं यो महद्ब्रह्म परमं यः परायणम् ॥ ९ ॥

परममिति । परमं प्रकृष्टं महद्बृहत्तेजश्चैतन्यलक्षणं सर्वावभासकम् । श्रुतिश्च 'येन सूर्यस्तपति तेजसेद्धस्तदेव ज्योतिषां ज्योतिर्न तत्र सूर्यो भाति न चन्द्रतारकम्' इत्यादिश्रुतेः । 'यदादित्यगतं तेज' इत्यादि स्मृतेश्च । परमं तपस्तपत्याज्ञापयतीति तपः 'य इमं च लोकं परमं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति' इत्यन्तर्यामिब्राह्मणे सर्वनियन्तृत्वं श्रूयते।'भीषास्माद्वातःपवते' इत्यादि तैत्तिरीयके । तपतीष्टे इति वा तपः 'भीषोदेति सूर्यः भीष्मास्मादग्निश्चन्द्रश्च मृत्युर्धावति पञ्चमः' इत्यादि च तस्यैश्वर्यम् । अनवच्छिन्नमतिमहत्त्वम् 'एष सर्वेश्वर' इत्यादिश्रुतेः । परमं सत्यादिलक्षणं ब्रह्म महनीयतया महत् परमं प्रकृष्टं परायणं पुनरावृत्तिशंकारहितं परमग्रहणात्सर्वत्र परं तेज आदित्यादिकं व्यावर्त्यते । सर्वत्र 'यो देव'इति विशेष्यते । यो देवः परमं तेजः, परमं तपः, परमं ब्रह्म, परमं परायणम्, स एकः सर्वभूतानां परायणमिति वाक्यार्थः ।

इदानीं प्रथमप्रश्नस्योत्तरमाह

पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ॥
दैवतं देवतानां च भूतानां योऽव्ययःपिता॥१०॥

पवित्राणामिति । पवित्राणां पवित्रं पावनानां तीर्थादीनां परमस्तु पुमान् । ध्यातो यः कीर्तितश्च स्तुतः संपूजितः स्मृतः प्रणतः पाप्मनः उन्मूलयतीति परमं पवित्रं संसारबंधहेतुभूतं पुण्यापुण्यात्मकं कर्म तत्कारणं चाज्ञानं सर्वं नाशयन्स्वयाथात्म्यज्ञानेनेति वा पवित्राणां पवित्रम् । 'रूपमारोग्यमर्थांश्च भोगांश्चैवा-

नुपद्गिकान् ॥ ददाति ध्यायतो नित्यमपवर्गप्रदो हरिः । समुत्सृज्याखिलं चान्यः सोऽच्युतः किं न चिन्त्यते ॥ ध्यायेन्नारायणं देवं स्नानादिषु च कर्मसु । प्रायश्चित्तं हि सर्वस्य दुष्कृतस्येति वै श्रुतिः । अतिपातकयुक्तोऽपि ध्यायन्निमिषमच्युतम् । भूयस्तपस्वी भवति पंक्तिपावनपावनः । आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ हरिरेकः सदा ध्येयो भवद्भिः सत्वसंस्थितैः ॥ ओमित्येवं सदा विप्राः पठत ध्यात केशवम् ॥ भिद्यते हृदयग्रन्थिश्छिद्यंते सर्वसंशयाः ॥ क्षीयंते चास्यकर्माणि तस्मिन्दृष्टे परावरे ॥ यन्नामकीर्तनं भक्त्या विलापनमनुत्तमम् ॥ मैत्रेयाशेषपापानां धातूनामिव पावकः ॥ अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ॥ पुमान्विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥ ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ॥ यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥ हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ॥ अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः ॥ ज्ञानतोऽज्ञानतो वापि वासुदेवस्य कीर्तनात् ॥ तत्सर्वं विलयं याति तोयस्थं लवणं यथा ॥ यस्मिन्न्यस्तमतिर्नयाति नरकं स्वर्गोऽपि यच्चिन्तने विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोऽपि लोकोऽल्पकः । मुक्तिं चेतसि यस्स्थितोऽमलधियां पुंसां ददात्यव्ययः किं चित्रं तदघं प्रयाति विलयं तत्राच्युते कीर्तिते ॥ शमायालं जलं वन्हेस्तमसो भास्करोदयः ॥ शान्तिकाले त्वघौघस्य नामसंकीर्तनं हरेः ॥ हरेर्नामैव नामैव नामैव मम जीवनम्॥कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥ स्तुत्वा विष्णुं वासुदेवं विपापो जायते नरः ॥ विष्णोः संपूजनान्नित्यं सर्वपापं प्रणश्यति ॥ सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ॥ येषां हृदिस्थो भगवान्मङ्गलायतनं हरिः ॥ गंगास्नानसहस्रेषु पुष्करस्नानकोटिषु ॥ यत्पापं विलयं याति स्मृते नश्यति तद्धरौ ॥ प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ॥ यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥ कलिकल्मषमत्युग्रं नरकार्तिप्रदं नृणाम् ॥

प्रयाति विलयं सद्यः सकृद्यत्रापि संस्मृते ॥ सकृत्स्मृतोऽपि गोविन्दो नृणां जन्मशतैः कृतम् ॥ पापराशिं दहत्याशु तूलराशिमिवानलः ॥ यथाग्निरुद्धूतशिखः कक्षं दहति सानिलः ॥ तथा चित्तास्थितो विष्णुर्योगिनां सर्वकिल्बिषम् ॥' ईश्वरो देवीं प्रत्याह मुक्तिकारणम् 'यावज्जीवं प्रणवमथवा वर्तयेद्रौद्रियं वा याजुर्वेद्यं वसतिमथवा वारणस्यां विदध्यात् ॥ हित्वा लज्जां कलिमलकुलच्छेदनान्नीरयेद्वा विष्णोर्नामान्यनिशमथवा मुक्तिरेषा चतुर्धा ॥ जनार्दनं भूतपतिं जगद्गुरुं स्मरन्मनुष्यः सततं महामुने ॥ दुःखानि सर्वाण्यपहन्ति साधयत्यशेषकार्याणि च यान्यभीप्सते ॥ कलाव आपि दोषाढ्ये विषयासक्तमानसः ॥ कृत्वापि सकलं पापं गोविन्दं संस्मरञ्छुचिः॥ वासुदेवे मनो यस्य जपहोमार्चनादिषु ॥ तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम् ॥ लोकत्रयाधिपतिमप्रतिमप्रभाव मीषत्प्रणम्य शिरसा प्रभविष्णुमीशम् ॥ जन्मान्तरमलयकल्पसहस्रजातमाशु प्रणाशमुपयाति नरस्य पापम् ॥ एकोऽपि कृष्णे सुकृतप्रणामो दशाश्वमेधावभृथेन तुल्यः ॥ दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥ अतसीपुष्पसंकाशं पीतवाससमच्युतम् ॥ ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम् ॥ शाठ्येनापि नमस्कारः प्रयुक्तश्चक्रपाणये ॥ संसारस्थूलबन्धानामुद्वेजनकरो हि सः ॥ इत्यादिश्रुतिस्मृतीतिहासपुराणेभ्यः मङ्गलं सुखं तत्साधनं तत्र ज्ञापकं च तेषामपि परमानन्दलक्षणं परं मङ्गलमिति मङ्गलानां च मङ्गलम् । दैवतं देवतानां च देवः द्योतनादिभिः समुत्कर्षेण वर्तमानत्वात् । भूतानां योऽव्ययः [illegible] ता जनको स एकं दैवतं लोके इति वाक्यार्थः [illegible] सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ॥ कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेताः केवलो निर्गुणश्च ॥ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ॥ तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ।' इतिश्वेताश्वतराणां मन्त्रोपनिषदि । 'सेयंदेवतैक्षत' इति छान्दोग्ये । ननु कथमेको देवो जीवभेदात् ।

इति पृष्टैकदैवतविषयत्वात् । यत्र पुल्लिङ्गशब्दप्रयोगस्तत्र 'विष्णुः' विशेष्यः । यत्र स्त्रीलिंगशब्दप्रयोगस्तत्र 'देवता' विशेष्यते । यत्र नपुंसकप्रयोगस्तत्र 'ब्रह्म' विशेषणीयम्

ॐ विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।
भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ॥ १४ ॥

'यतः सर्वाणि भूतानि' इत्यारभ्य जगत्पदुत्तिस्थितिलयकारणस्य ब्रह्मणः एकदैवतत्वेनाभिहितत्वादादावुभयविधं ब्रह्म विश्वशब्देनोच्यते । विश्वस्य जगतः कारणत्वेन विश्वमित्युच्यते ब्रह्म । आदौ तु 'विश्वम्' इति कार्यशब्देन कारणग्रहणं । कार्यभूत विरिञ्च्यादिनामभिरुपपन्ना स्तुतिर्विष्णोरिति दर्शयितुम् । यद्वा परस्मात्पुरुषान्नभिन्नमिदं विश्वं परमार्थतः सदस्ति । अथवा विश्वं ब्रह्म 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतेः । किञ्च संहृतौ विशन्ते सर्वाणि भूतान्यस्मिन्निति विश्वं ब्रह्म 'यत्प्रयन्त्यभिसंविशन्ति' इति श्रुतेः। तथाहि 'सकलं जगत्कार्यमेव विशत्यत्र चाखिलं विशत्युभयथापि विश्वं ब्रह्म' इति श्रुतेः । नाचिकेतसा पृष्टे मृत्युरुवाच 'अन्यत्र धर्मादन्यत्राधर्मात्' इत्यारभ्य 'सर्वे वेदा यत्पदमामनन्ति । तपांसि सर्वाणि च यद्वदंति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति । तत्ते पदं संग्रहेण ब्रवीमि । ॐ मित्येतत् । एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् ॥ एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् । ॐ मिति ब्रह्म ॐ मितीदं सर्वम् । तद्यथा शंकुना सर्वाणि पर्णानि संतृणानि एवमोंकारेण सर्वा वाक् संतृण्णा [illegible] ॥ इति [illegible] [illegible] ' [illegible] परं:
प्रणवेऽव्ययः । सर्वस्य प्रणवो ह्यादिर्मध्यमन्त स्तथैव च ॥ एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम् ॥ प्रणवं हीश्वरं विद्यात्सर्वस्य हृदये स्थितम् ॥ सर्वव्यापिनमोङ्कारं मत्वा धीरो न शोचति ॥

अमात्रानन्तमात्रश्च द्वैतस्योपशमः शिवः ॥ ॐ कारो विदितो येन स मुनिर्नेतरो जनः ॥ ॐतद्ब्रह्म । ॐ तद्वायुः ॐ तदात्मा ॐ तत्सत्यम् । ॐ तत्पुरोर्नमः' इत्यादिश्रुतिभिः 'ॐ मित्येकाक्षरं ब्रह्म' 'रसोऽहमप्सु कौंतेय प्रभास्मि शशिसूर्ययोः । प्रणवः सर्ववेदेषु गिरामस्म्येकमक्षरम् ॥ आद्यं तु त्र्यक्षरं ब्रह्म त्रयी यस्मिन्प्रतिष्ठिता ॥ एकाक्षरं परं ब्रह्म प्राणायामः परं तपः । प्रणवाद्यास्तथा वेदाः प्रणवे पर्यवस्थिताः ॥ वाङ्मयं प्रणवं सर्वं तस्मात्प्रणवमभ्यसेत् ॥' इत्यादिस्मृतेश्च 'विश्व' शब्देन ॐकारोऽप्यभिधीयते वाच्यवाचकयोरत्यभेदाभावात् । विश्वमित्यों-कार एव ब्रह्मेत्यर्थः । 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति । एतदुक्तं भवति यस्मात्सर्वमिदं विकारजातं ब्रह्म तज्जत्वात्तल्लयत्वात्तदनन्तत्वाच्च । न च सर्वस्यैकात्मकत्वे रागादयः संभवन्ति 'तस्माच्छान्त उपासीत' इति श्रुतेः । 'श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ॥ आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ॥ सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ निर्गुणः परमात्मात्र देहं व्याप्य व्यवस्थितः ॥ तमहं ज्ञानविज्ञेयं नावमन्ये न लङ्घये ॥ यद्यागमैर्न विन्देयं तमहं भूतभावनम् ॥ क्रमेयं त्वां गिरिं चेमं हनूमानिव सागरम् ॥ बद्धवैराणि भूतानि द्वेषं कुर्वन्ति चेत्ततः ॥ शोच्यान्यहोऽतिमोहेन व्याप्तानीति मनीषिणाम् ॥ एते भिन्नदृशो दैत्या विकल्पाः कथिता मया ॥ कृत्वाभ्युपगमं तत्र संक्षेपः श्रूयतां मम ॥ विस्तारः सर्वभूतस्य विष्णोः सर्वमिदं जगत् ॥ द्रष्टव्यमात्मवत्तस्मादभेदेन विचक्षणैः ॥ समुत्सृज्यासुरं भावं तस्माद्यूयं तथा वयम् ॥ तथा यत्नं करिष्यामो यथा प्राप्स्याम निर्वृतिम् ॥ सर्वत्र दैत्याः समतामुपेत समत्वमाराधनमच्युतस्य ॥ न मन्त्रादिकृतस्तात नच नैसर्गिको मम ॥ प्रभाव एष सामान्यो यस्य यस्याच्युतो हृदि ॥ अन्येषां यो न पापानि चिन्तयत्यात्मनो यथा ॥ तस्य पापागमस्तात हेत्वभावान्न विद्यते ॥ कर्मणा मनसा वाचा परपीडां करोति यः ॥ तद्बीजं जन्म फलति प्रभूतं तस्य चाशुभम् ॥

तमदमानमत्सराणां व्रज भट दूरतरेण मानवानाम्' इत्यादिवचनैर्वैष्णवलक्षणस्यैवंप्रकारत्वाच्च हिंसादिरहितेन विष्णोः स्तुतिनमस्कारादि कर्तव्यमिति। 'श्रद्धया देयमश्रद्धयाऽदेयंश्रद्धयाग्निः समिध्यत' इत्यादिश्रुतेः। 'श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत्। इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः॥ अश्रोत्रियं श्राद्धमधीतमव्रतमदक्षिणं यज्ञमनृत्विजा हुतम्॥ अश्रद्धया दत्तमसंस्कृतं हविर्भागाः षडेते तव दैत्यसत्तम॥ पुण्यमद्वेषिणां यच्च मद्भक्तद्वेषिणां तथा॥ क्रयविक्रयसक्तानां पुण्यं यच्चाग्निहोत्रिणाम्॥ अश्रद्धया च यद्दानं यजतां ददतां तथा॥ तत्सर्वं तव देवेन्द्र मत्प्रसादाद्भविष्यति'॥ 'अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्॥ असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह॥' इत्यादिस्मृतिभिश्च श्रद्धया स्तुतिनमस्कारादि कर्तव्यमश्रद्धया न कर्तव्यम्। 'ॐ तत्सदितिनिर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति भगवद्वचनात्स्तुतिनमस्कारादिकं कर्म सात्त्विकं त्रिगुणमपि श्रद्धापूर्वकं ब्रह्मणोऽभिधानत्रयप्रयोगेण सगुणं सात्त्विकं संपादितं भवति]। आत्मानं विष्णुं ध्यात्वाऽर्चनस्तुतिनमस्कारादि कर्तव्यम्। 'ना विष्णुः कीर्तयेद्विष्णुं नाविष्णुर्विष्णुमाप्नुयात्' इति महाभारते कर्मकाण्डे। 'सर्वाण्येतानि नामानि परस्य ब्रह्मणोऽनघ॥' सर्वकामानवाप्नोति समाराध्य जगद्गुरुम्॥ तन्मयत्वेन गोविन्दमित्येतद्दालभ्य नान्यथा॥ तन्मयो वाञ्छितान्कामान्यदवाप्नोति मानवः॥' इति विष्णुधर्मे। 'सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः॥ सर्वथा वर्तमानोऽपि स योगी मयि वर्तते॥' इति भगवद्गीतासु। 'अहं हरिः सर्वमिदं जनार्दनो नान्यत्ततः कारणकार्यजातम्॥ईदृङ्मनो यस्य न तस्य भूयो भवोद्भवा द्वंद्वगदा भवन्ति' इति विष्णुपुराणे॥ 'गुरोर्यत्र परीवादो निन्दा वापि प्रवर्तते॥ कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः॥ तस्माद्ब्रह्मैवाचार्यस्वरूपेणावतिष्ठतीति' व्यासस्मृतेः। 'वरं हुतवहज्वालापुञ्जरस्यान्तर्व्यवस्थितिः। न शौरिचिन्ताविमुखजनसंवासवैशसम्' इतिका-

त्यायनवचनाद्यत्र देशे वासुदेवनिन्दा तत्र वासो न कर्तव्यः । एतदुक्तं भवति । 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' ॥ इतिश्वेताश्वतरमन्त्रवर्णाद्धरौ गुरौ च परा भक्तिः कार्येति । 'अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ॥ पुमान्विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥ ज्ञानतोऽज्ञानतो वापि वासुदेवस्य कीर्तनात् ॥ तत्सर्वं विलयं याति तोयस्थं लवणं यथा ॥ कलिकल्मषमत्युग्रं नरकार्तिप्रदं नृणाम् ॥ प्रयाति विलयं सद्यः सकृत्कृष्णस्य संस्मृतेः ॥ सकृत्स्मृतोऽपि गोविन्दो नृणां जन्मशतैः कृतम् ॥ पापराशिं दहत्याशु तूलराशिमिवानलः । सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ॥ बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥' 'एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः ॥ दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥' एवमादिवचनैः श्रद्धाभक्त्योरभावेऽपि नामसंकीर्तनं समस्तदुरितं नाशयतीति मन्तव्यं किमुत नामसहस्रं नाशयतीति । 'मनसा ह्यग्रे संकल्पयत्यथ वाचा व्याहरति ।' 'मनसा यद्ध्यायति तद्वाचा वदति' इति श्रुतिभ्यां स्मरणं ध्यानं च नामसंकीर्तनेऽन्तर्भूतम् । नामशक्तितात्पर्यावधारणं 'यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने विघ्नो यत्र निवेशिते च मनसि ब्राह्मोऽपि लोकोऽल्पकः ॥ मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययः किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्तिते ॥' इति विष्णुपुराणान्ते श्रीपाराशरेणोपसंहृतम् ॥ 'आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ॥ इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥' इति श्रीमहाभारतान्ते भगवता श्रीवेदव्यासेनोपसंहृतम् । 'हरिरेकः सदा ध्येयो भवद्भिः सत्त्वसंस्थितैः ॥ ॐ मित्येवं सदा विप्राः पठध्वं ध्यात केशवम् ॥' इति हरिवंशे । कैलासयात्रायां 'हरिरेको ध्यातव्यः' इत्युक्तं महेश्वरेणापि, एतन्मतमभिप्रेत्य 'एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः' इत्याधिक्यमुक्तम् । 'किमेकम्' इति 'यतः सर्वाणि' इत्यादिना यद्ब्रह्मोक्तं तद्भिप्रायेणो-

क्तामिति व्याख्यातम् । तत्किमित्याकांक्षायामाह ' विष्णुः ' इति । तथाच ऋग्वेदे ' तमुस्तोतारः पूर्व्यं यथाविद ऋतस्य गर्भं जनुषा पिपर्तन ॥ अस्य जानन्तो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहे ॥' इत्यादि श्रुतिभिर्विष्णोर्नामसंकीर्तनं सम्यग्ज्ञानमाप्तये विहितम् । ' तमेव स्तोतारः पुराणं यथाज्ञानेन सत्यस्य गर्भं जन्म समाप्तिं कुरुत । जानन्त आ अस्य विष्णोर्नामापि आवदत अन्ये वदन्तु मा वा । हे विष्णो वयं ते सुमतिं शोभनं महः भजामहे ' इति श्रुतेरभिप्रायः । ' वेवेष्टि व्याप्नोतीति विष्णुः । विशेर्व्याप्त्यभिधायिनो नुमत्ययान्तस्य रूपं ' विष्णुः ' इति । देशकालवस्तुपरिच्छेद शून्य इत्यर्थः । ' व्याप्ता मे रोदसी पार्थ कान्तिश्चाभ्यधिका स्थिता॥क्रमणाचाप्यहं पार्थ विष्णुरित्यभिसंज्ञित ' इति महाभारते । ' यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ॥ अन्तर्बहिश्च त त्सर्वं व्याप्य नारायणः स्थितः ॥ ' इत्यादिश्रुतेर्बृहन्नारायणे । सर्वभूतस्थमेकं नारायणकारकरूपमेकाकारं परं ब्रह्म शोकमोह विनिर्मुक्तं विष्णुं ध्यायन्नसीदति ' इत्यात्मबोधोपनिषदि । विशतेर्वा ' नु ' प्रत्ययान्तस्य रूपं विष्णुरिति । ' यस्माद्विश्वमिदं सर्वं तस्य शक्त्या महात्मनः ॥ तस्मादेवोच्यते विष्णुर्विशधातोः प्रवेशनात् ॥ इति विष्णुपुराणे । यदुद्देशेन वषट्क्रिया स वषट्कारः। यस्मिन्यज्ञे वा वषट्क्रिया स वषट्कारः । ' यज्ञो वै विष्णुः ' इति श्रुतेर्यज्ञो वषट्कारः वषट्कारादिमन्त्रात्मना देवान्प्रीणयतीति वा । ' प्रजापतिश्च वषट्कारश्च ' इति श्रुतेर्देवता वा । भूतं भव्यं भवच्च भूतभव्यभवन्ति । तेषां प्रभुर्भूतभव्यभवत्प्रभुः । कालभेदमनादृत्य सन्मात्रप्रतियोगिकमैश्वर्यमस्येति प्रभुत्वम् । रजोगुणं समाश्रित्य भूतानि विरिञ्चिरूपेण करोतीति भूतकृत् तमोगुणमधिष्ठाय रुद्रात्मना भूतानि निकृन्तति छिनत्ति, हिनस्ति इति वा भूतकृद्क्षेयः । सत्वगुणमधिष्ठाय भूतानि बिभर्ति पालयति धारयति पोषयति वा भूतभृत् । प्रपञ्चरूपेण भवतीति केवलं भवत्येवेति भावः । भवनं भावः सत्तात्मको वा । भूतात्मा भूताना-

मात्मांतर्यामीति वा ' भूतानामन्तर्यामी ' इति श्रुतेः । भूतानि भावयति जनयति वर्धयतीति वा भूतभावनः । भूतकृदादिभिर्गुण तन्त्रत्वं प्राप्तं प्रतिषिध्यते ॥ १४ ॥

## पूतात्मा परमात्मा च मुक्तानां परमा गतिः ॥
## अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च॥१५॥

पूतात्मेति । पूत आत्मा यस्य स पूतात्मा कर्मधारयो वा । केवलो निर्गुणश्चेति श्रुतेः । गुणोपरागः स्वेच्छान्तः पुरुषस्येति कल्प्यते । ( १० इति दश नामानि व्याख्यातानि ) । परमश्चासावात्मा च परमात्मा कार्यकारणविलक्षणो नित्यशुद्धमुक्तस्वभावः। मुक्तानां परमा उत्कृष्टा गतिर्गन्तव्या देवता। पुनरावृत्त्यसंभवात्तद्गतस्येति मुक्तानां परमा गतिः । ' मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ' इति भगवद्वचनम् । नव्येति नास्य व्ययो विनाशो विकारो वा विद्यते इत्यव्ययः । ' अजरोऽमरोऽव्यय ' इति श्रुतेः । पुरं शरीरं तस्मिञ्शेते पुरुषः । ' नवद्वारं पुरं पुण्यमेतैर्भावैः समन्वितम् ॥ व्याप्य शेते महात्मा यस्तस्मात्पुरुष उच्यते ' इति महाभारते । यद्वा अस्तेर्व्यस्ताक्षरयोगिन आसीत्पुरा पूर्वमेवेति विग्रहं कृत्वा व्युत्पादितः पुरुषः । ' पूर्वमेवाहमासं तत्पुरुषस्य पुरुषत्वम् ' इति श्रुतेः । पुरुषु भूरिषु उत्कर्षशालिषु सीदतीति वा पुरूणि फलानि राति ददाति पुरूणि भुवनानि संहारसमये अस्यति अन्तं करोति वा पूर्णत्वाद्वा सदनत्वाद्वा पुरुषः । ' पूरणात्सदनाच्चैव ततोऽसौ पुरुषोत्तमः ' इति पञ्चमवेदे । साक्षादव्यवधानेन स्वरूप बोधेन पश्यति सर्वमिति साक्षी । ' साक्षाद्द्रष्टरि संज्ञायाम् ' इति पाणिनिवचनादिन्प्रत्ययः । क्षेत्रं शरीरं जानातीति क्षेत्रज्ञः । ' आतो नपुमर्गे कः ' इति कप्रत्ययः । ' क्षेत्रज्ञं चापि मां विद्धि ' इति भगवद्वचनात् । ' क्षेत्राख्यानि शरीराणि तेषां चैव यथासुखम्॥ तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते ' इति ब्रह्मपुराणे स

एव । न क्षरतीत्यक्षरः । अश्नोतेरश्नोतेर्वा सरप्रत्ययान्तस्य रूपमक्षर इति । एवकारात्क्षेत्रक्षेत्रज्ञयोरभेदः परमार्थतः 'तत्त्वमसि' इत्यादि श्रुतेः । चकाराद्व्यावहारिको भेदः प्रसिद्धेरमानत्वात् ॥ १९ ॥

**योगो योगविदां नेता प्रधानपुरुषेश्वरः ॥**
**नारसिंहवपुः श्रीमान्केशवः पुरुषोत्तमः ॥१६॥**

**योग इति ।** 'ज्ञानेन्द्रियाणि सर्वाणि निरुध्य मनसा सह ॥ एकत्वभावनायोगः क्षेत्रज्ञ परमात्मनोः ॥' तदवाप्यतया योगः । योगं विन्दन्ति विचारयन्ति जानन्ति लभन्त इति वा योगविदस्तेषां नेता ज्ञानिनां योगक्षेमवहनादिनेतियोगविदां नेता । प्रधानं प्रकृतिर्माया पुरुषो जीवस्तयोरीश्वरः प्रधानपुरुषेश्वरः । ( २० ) नरस्यावयवाः सिंहस्यावयवाश्च यस्मिल्लक्ष्यन्ते तद्वपुर्यस्य स नारसिंहवपुः । यस्य वक्षसि नित्यं वसति श्रीः स श्रीमान् । अभिरूपाः केशा यस्य स केशवः । 'केशाद्वोऽन्यतरस्याम्' इति व प्रत्ययः प्रशंसायाम् ।' यद्वा कश्च अश्च ईशश्च केशास्त्रिमूर्तयस्ते यद्वशेन वर्तन्ते स वा केशवः । केशिवधाद्वा केशवः । 'यस्मात्त्वयैव दुष्टात्मा हतः केशी जनार्दन ॥ तस्मात्केशवनाम्ना त्वं लोके ज्ञेयो भविष्यसि ॥' इति विष्णुपुराणे श्रीकृष्णं प्रति नारदवचनं । 'पृषोदरादित्वाच्छन्दसायुक्तकल्पना । पुरुषाणामुत्तमः पुरुषोत्तमः । अत्र 'न निर्धारणे' इति षष्ठीसमासप्रतिषेधो न भवति । जात्याद्यनपेक्षयाऽसमर्थत्वात् । यत्र पुनर्जातिगुणक्रियापेक्षया पृथक्क्रियते तत्र समर्थत्वान्निषेधः प्रवर्तते । 'मनुष्याणां क्षत्रियः शूरतमः' । 'गवां कृष्णा गौः संपन्नक्षीरतमा' । 'अध्वगानां धावन्शीघ्रतमः' इति अथवा पञ्चमीसमासः । तथाच भगवद्वचनं 'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' ॥ १६ ॥

सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ॥
सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥१७॥

सर्व इति । 'असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात् ॥ सर्वस्य सर्वदा ज्ञानात्सर्वमेनं प्रचक्षते ॥' इतिभगवद्व्यासवचनात्सर्वः । शृणाति सकलाः प्रजाः संहरति संहारयति वा शर्वः । निस्त्रैगुण्यतया शुद्धत्वाच्छिवः। स ब्रह्म स शिव इति अभेदादेशाच्छिवादिनामभिर्हरिरेव स्तूयते । स्थिरत्वात्स्थाणुः । भूतानामादिकारणत्वादितिभूतादिः । प्रलयेऽस्मिन्सर्वं निधीयत इति निधिः 'कर्मण्यधिकरणे च' इति किप्रत्ययः । स एव निधिर्विशिष्यते अव्ययोऽविनश्वरो निधिरित्यर्थः ( ३० ) स्वेच्छया समीचीनं भवनं यस्य स संभवः । 'संभवामि युगे युगे' इति भगवद्वचनात् । 'तथा दुष्टविनाशाय साधूनां रक्षणाय च ॥ स्वेच्छया संभवाम्येवं गर्भदुःख विवर्जितः' ॥ इति सर्वेषां भोक्तॄणां फलानि भावयतीति भावनः । सर्वफलदातृत्वं 'फलमतउपपत्तेः' इत्यत्र प्रतिपादितम् । प्रपञ्चस्याधिष्ठानत्वेन धारणाद्भर्ता । प्रकर्षेण महाभूतानि अस्माज्जायन्त इति प्रभवः । प्रकृष्टो भवो जन्मास्येति वा। सर्वासु क्रियासु सामर्थ्यातिशयात्प्रभुः । निरुपाधिकमैश्वर्यमस्येति ईश्वरः 'एष सर्वेश्वर' इति श्रुतेः ॥ १७ ॥

स्वयंभूः शम्भुरादित्यः पुष्कराक्षो महास्वनः ॥
अनादिनिधनो धाता विधाता धातुरुत्तमः॥१८॥

स्वयमेव भवतीति स्वयंभूः 'स एव स्वयमुद्बभौ' इतिमानवं वचनम् । येषामुपरि भवति यश्चोपरि भवति स स्वयमेव भवतीति स्वयंभूः 'परिभूः स्वयंभूः' इतिमन्त्रवर्णात् । अथवा स्वयंभूः परमेश्वरः। स्वयमेव स्वतन्त्रो भवति सर्वदा न परतन्त्र इति 'पराञ्चि खानि व्यतृणत्स्वयंभूः' इति मन्त्रवर्णात्। शं सुखं भक्तानां भावयतीतिशम्भुः। आदित्यमण्डलान्तस्थो हिरण्मयः पुरुष आदित्यः। द्वादशादित्येषु विष्णुर्वा 'आदित्यानामहं विष्णुः' इत्युक्तेः । अदितेर-

खण्डिताया मह्या अयं पतिरिति वा । 'इयं वा अदितिः । महीं देवीं विष्णुपत्निम्' इति श्रुतेः । यथादित्य एक एवानेकेषु जलभाजनेषु अनेकवत्प्रतिभासते एवमनेकेषु शरीरेषु एक एवात्मानेकवत्प्रतिभासत इत्यादित्यसाधर्म्याद्वादित्यः । पुष्करेणोपमिते अक्षिणी यस्येति पुष्कराक्षः । ( ४० ) महानूर्जितः स्वनः शब्दः श्रुतिलक्षणो वा यस्येति महास्वनः । 'सन्महद्०' इत्यादिना समासे कृते 'आन्महतः समानाधिकरणजातीययोः' इत्यात्वम् । 'अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः' इत्यादि श्रुतेः । आदिर्जन्म निधनं विनाशस्तद्द्वयं यस्य न विद्यते सोऽनादिनिधनः । अनन्तादिरूपेण विश्वं बिभर्तीति धाता कर्मणां तत्फलानां च विधाता । अनन्तादीनामपि धारकत्वाद्विशेषेण दधातीति वा । धातुरुत्तम इति नामैकं सविशेषणं सामानाधिकरण्येन सर्वधातुभ्यः पृथिव्यादिभ्य उत्कृष्टश्चिद्धातुरित्यर्थः । धातुर्विरिञ्चेरुत्कृष्ट इति वा । नामद्वयं वा कार्यकारणप्रपञ्चधारणाच्चिदेव धातुरुक्तः । सर्वेषामुत्कृष्टानामतिशयेन उद्गतत्वादुत्तमः ॥ १८ ॥

अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ॥
विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः॥१९॥

शब्दादिरहितत्वान्न प्रत्यक्षगम्यः । नाप्यनुमानविषयः । तद्व्याप्यलिङ्गाभावात् । नाप्युपमानसिद्धो निर्भागत्वेन सादृश्याभावात् । नाप्यर्थापत्तिग्राह्यस्तद्विनानुपपद्यमानस्यासम्भवात् । नाप्यभावगोचरो भावत्वेन संमतत्वात् । अभावसाक्षित्वाच्च षष्ठप्रमाणस्य । नापि शास्त्रप्रमाणवेद्यः प्रमाणजन्यातिशयाभावात् । यद्येवं शास्त्रयोनित्वं कथमुच्यते । प्रमाणादिसाक्षित्वेन प्रकाशस्वरूपस्य प्रमाणाविषयत्वे अध्यस्तातद्रूपनिवर्तकत्वं न शास्त्रप्रमाणत्वमित्य प्रमेयः साक्षित्वात् । हृषीकाणीन्द्रियाणि तेषामीशः क्षेत्रज्ञरूपभाक् । यद्वेन्द्रियाणि यस्य वशे वर्तन्ते स परमात्मा । यस्य वा सूर्यरूपस्य

चन्द्ररूपस्य जगत्प्रीतिकरा हृष्याः केशा रश्मयः हृषीकेशः पृषोदरादित्वात्साधुत्वम् । तथोक्तं मोक्षधर्मे 'सूर्यचन्द्रमसौ शश्वदंशुभिः केशसंज्ञितैः ॥ बोधयन्स्थापयंश्चैव जगदुत्तिष्ठते पृथक् । बोधनात्स्थापनाच्चैव जगतो हर्षणं भवेत् । अग्निषोमकृतैरेव कर्मभिः पांडुनन्दन । हृषीकेशो महेशानो वरदो लोकभावनः ॥' इति । जगत्कारणं पद्मं नाभौ यस्येति पद्मनाभः 'अजस्य नाभावाप्येकमर्पितम्' इति श्रुतेः । अमराणां प्रभुरमरप्रभुः । विश्वं कर्म क्रिया क्रियत इति जगत्कर्म विश्वं कर्म यस्य विश्वकर्मा । विचित्रनिर्माणशक्तिमत्वाद्विश्वकर्मा त्वष्टा तत्साहश्याद्वा (५०) मननान्मनुः 'नान्योऽतोऽस्ति मन्ता' इति श्रुतेः । मन्त्रो वा प्रजापतिर्वा । संहारसमये सर्वभूततनूकरणत्वात्त्वष्टा तक्षतेस्तनूकरणार्थत्वात्प्रत्ययः । अतिशयेन स्थूलः स्थविष्ठः । पुराणः स्थविरः 'एकं ह्यस्य स्थविरस्य नाम' इति श्रुतेः । वयोवचनो वा स्थिरत्वाद्ध्रुवः स्थविरो ध्रुव इत्येकमिदं नाम सविशेषणम् ॥ १९ ॥

अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।
प्रभूतस्त्रिककुब्धाम पवित्रं मङ्गलं परम् ॥ २० ॥

कर्मेन्द्रियैर्न गृह्यत इत्यग्राह्य इत्यर्थः 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुतेः । शश्वत्सर्वेषु कालेषु भवतीति शाश्वतः 'शाश्वतं शिवमच्युतम्' इति श्रुतेः । 'कृषिर्भूवाचकः शब्दो नश्च निर्वृतिवाचकः ॥ विष्णुस्तद्भावयोगाच्च कृष्णो भवति शाश्वत' इति व्यासवचनात्सच्चिदानन्दात्मकः कृष्णः । 'कृषामि पृथिवीं पार्थ भूत्वा कार्ष्णायसो हलः । कृष्णो वर्णश्च मे यस्मात्तस्मात्कृष्णोऽहमर्जुन ॥ इति वा कृष्णः । लोहिते अक्षिणी यस्य स लोहिताक्षः । 'सप्तावृषभो लोहिताक्ष' इति श्रुतेः । प्रलये भूतानि तर्दयति हिनस्तीति प्रतर्दनः । ज्ञानैश्वर्यादिभिर्गुणैः संपन्नः प्रभूतः (६०) ऊर्ध्वाधोमध्यभेदेन तिसृणां ककुभामपि धामेति त्रिककुब्धामेत्येकमिदं नाम । येन पुनाति यो वा पुनाति ऋषिर्देवता वा तत्पवित्रम् ।

'पुवः संज्ञायाम्' 'कर्नरिचर्षिदेवतयोः' इति भगवत्पाणिनिस्मरणादित्रप्रत्ययः। 'अशुभानि निराचष्टे तनोति शुभसन्ततिम् ॥ स्मृतिमात्रेण यत्पुंसां मङ्गलं ब्रह्म तद्विदुः ॥' इति विष्णुपुराणे कल्याणरूपत्वान्मङ्गलम्। स सर्वभूतेभ्य उत्कर्षतरं मङ्गलमित्येकमिदं नाम सविशेषणम् ॥ २० ॥

**ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः ॥**
**हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥ २१ ॥**

सर्वभूतनियन्तृत्वादीशानः। प्राणान्ददाति चेष्टयतीति प्राणदः 'कोह्येवान्यात्कः प्राण्यात्' इति श्रुतेः। यद्वा प्राणान्कालात्मना द्यति खण्डयतीति प्राणान्दापयतिशोधयतीति ददातिलुनातीति वा प्राणदः। प्राणितीति प्राणः क्षेत्रज्ञः परमात्मा वा 'प्राणस्य प्राणम्' इति श्रुतेर्मुख्यप्राणो वा। वृद्धतमो ज्येष्ठः। 'ज्येच' इत्यधिकारे 'वृद्धस्यच' इति वृद्धशब्दस्य ज्यादेशविधानात्। प्रशस्यतमः श्रेष्ठः 'प्रशस्यस्य श्रः' इति श्रादेश विधानात् 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च' इति श्रुतेः मुख्यप्राणोवा 'ज्येष्ठश्च' इत्याधिकरणसिद्धत्वात्। सर्वकारणत्वाद्वा ज्येष्ठः। सर्वातिशयत्वाद्वा श्रेष्ठः। ईश्वरत्वेन सर्वासां प्रजानां पतिः प्रजापतिः। हिरण्मयाण्डान्तर्वर्तित्वाद्धिरण्यगर्भः। विरिंच्यात्मना वा हिरण्यगर्भः। 'हिरण्यगर्भः समवर्तताग्र' इति श्रुतेः। (७०) भूर्गर्भो यस्य स भूगर्भः। मायाः श्रियो धवः पतिर्माधवः। मधुविद्यावबोध्यत्वाद्वा माधवः। 'मौनाद्ध्यानाच्च योगाच्च विद्धि भारत माधवम्' इति व्यासवचनाद्वा माधवः। मधुनामानं दैत्यं सूदितवानिति मधुसूदनः 'कर्णमिश्रोद्भवं चापि मधुनाममहासुरम्॥ ब्रह्मणोऽपचितिं कुर्वञ्जघान पुरुषोत्तमः ॥ तस्य तात वधादेव देवदानवमानवाः ॥ मधुसूदनमित्याहुऋषयश्च जनार्दनम् ॥' इति श्रुतेः ॥ २१ ॥

ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ॥
अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥२२॥

सर्वशक्तिमत्तया ईश्वरः। विक्रमः शौर्यं तद्योगाद्विक्रमी 'धनुरस्यास्तीति धन्वी। व्रीह्यादित्वादिनिप्रत्ययः। 'रामः शस्त्रभृतामहम्।' इति भगवद्वचनात्। मेधा बहुग्रन्थावधारणसामर्थ्यं सा यस्यास्तीति मेधावी 'अस्मायामेधास्रजोविनिः' इतिपाणिनिवचनाद्विनिमत्ययः सलोपश्च। विचक्रमे जगद्विश्वं तेन विक्रमः। विना गरुडेन पक्षिणा क्रमणाद्वा विक्रमः 'क्रमणात्क्रमहेतुत्वाद्वा क्रमो विष्णुः' इति मनुवचनात्। अविद्यमान उत्तमो यस्मात्सोऽनुत्तमः यस्मात्परं नापरमस्ति किञ्चित्' इति श्रुतेः। 'नत्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य' इति स्मृतेश्च (८०) दैत्यादिभिर्धर्षयितुं न शक्यत इति दुराधर्षः। प्राणिनां पुण्यापुण्यात्मकं कृतं कर्म जानातीति कृतज्ञः। पत्रपुष्पादिकं स्वल्पमपि प्रयच्छतो मोक्षं ददातीति वा कृतज्ञः। पुरुषप्रयत्नः कृतिः क्रिया च हिंसा वा कृतिः सर्वात्मकत्वात्क्रियाधारकत्वेन लक्ष्यते। कृतेति वा कृतिः। स्वमहिम्नि प्रतिष्ठितत्वादात्मवान् 'स भगवः कस्मिन्प्रतिष्ठितः स्वे महिम्नि' इति श्रुतेः ॥ २२ ॥

सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः ॥
अहः संवत्सरोः व्यालः प्रत्ययः सर्वदर्शनः॥२३॥

सुराणां देवानां शोभनदातॄणां वा ईशः। आर्तानामार्तिहरत्वाच्छरणम्। परमानन्दरूपत्वाच्छर्म। विश्वस्य कारणत्वाद्विश्वरेताः सर्वाः प्रजा यत्सकाशादुद्भवन्तीति स प्रजाभवः। प्रकाशरूपत्वादहः। (९०) कालात्मना स्थितो विष्णुः संवत्सर इत्युक्तः। व्यालवद्ग्रहीतुमशक्यत्वाद्व्यालः। प्रतीतिः प्रज्ञा प्रत्ययः 'प्रज्ञानं ब्रह्म' इति श्रुतेः सर्वदर्शनात्मकान्यक्षीणि यस्य स सर्वदर्शनः ॥ २३ ॥

अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः ।
वृषाकपिरमेयात्मा सर्वयोगविनिःसृतः ॥ २४ ॥

न जायत इत्यजः 'न जातो न जनिष्यते' इति श्रुतेः । 'न हि जातो न जायेऽहं न जनिष्ये कदाचन॥क्षेत्रज्ञः सर्वभूतानां तस्मादहमजः स्मृतः ॥' इति महाभारते । सर्वेषामीश्वराणामपीश्वरत्वात्सर्वेश्वरः 'एष सर्वेश्वर' इति श्रुतेः । नित्यनिष्पन्नरूपत्वात्सिद्धः सर्ववस्तुषु संविद्रूपत्वान्निरतिशयत्वात्फलरूपत्वाद्वा सिद्धिः । स्वर्गादीनां विनाशित्वादफलत्वम् । सर्वभूतानामादिकारणत्वात्सर्वादिः । स्वरूपसामर्थ्यान्न च्यवते न च व्यवाशिष्यत इत्यच्युतः । 'शाश्वतं शिवमच्युतम्' इति श्रुतेः। तथा च भगवद्वचनं 'यस्मान्न च्युतपूर्वोऽहमच्युतस्तेन कर्मणा' ॥ इति ( १०० ) नाम्नां शतमाद्यं विवृतम् । विश्वं, परमात्मा, नारसिंहवपुः, संभवो, महास्वनो, मनुः, निकुम्भराम, भूगर्भो, दुराधर्षः, संवत्सरः । वर्षणात्सर्वकामानां धर्मो वृषः । कात् तोयाद्भूमिमपादिति कपिर्वराहः । वृषरूपात्कपिरूपत्वाच्च वृषाकपिः । 'कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते ॥ तस्माद्वृषाकपिं प्राह कश्यपो मां प्रजापतिः ।' इति महाभारते । इयानिति मातुं परिच्छेत्तुं न शक्यते आत्मा अस्येत्यमेयात्मा । सर्वसम्बन्धविनिर्गतः सर्वयोगविनिःसृतः । 'असङ्गो ह्ययं पुरुष' इति श्रुतेः । नानाशास्त्रोक्तयोगाद्गम्यत्वाद्वा सर्वयोगविनिःसृतः ॥ २४ ॥

रूपत्वात्परमात्मा सत्यः ' सत्यं ज्ञानमनन्तं ब्रह्म ' इति श्रुतेः । मूर्तामूर्तात्मकत्वाद्वा ' सच्चत्यच्च अभवत् ' इतिश्रुतेः । सदिति प्राणोऽस्तीत्यन्नं यामिति दिवाकरस्तेन प्राणान्नादित्यरूपत्वाद्वा सत्यः । सम आत्मा मनो यस्य रागद्वेषादिभिरदूषितः स समात्मा । ' सम आत्मेति विद्यात् ' इतिश्रुतेः सर्वैरप्यर्थजातैः परिच्छिन्नो मितः सर्वैरपरिच्छिन्नोऽमित इत्यसंमितो वा सर्वविकाररहितत्वात्समः । मया लक्ष्म्या सहवर्तत इति वा समः । पूजितः स्तुतः संस्मृतो वा सर्वफलं ददाति न वृथा करोतीत्यमोघः । अवितथसंकल्पाद्वा ' सत्यसंकल्प ' इति श्रुतेः । ( ११० ) हृदयस्थं पुण्डरीकमश्नुते तत्रोपलक्षित इति पुण्डरीकाक्षः । ' हृत्पुण्डरीकं पुरमध्यसंस्थम् ' इति श्रुतेः । पुण्डरीकाकारे उभे अक्षिणी अस्येति वा । धर्मलक्षणं कर्म यस्येति स वृषकर्मा । धर्मार्थमाकृतिः शरीरं यस्येति स वृषाकृतिः ' धर्मसंस्थापनार्थाय संभवामि युगे युगे ' इति भगवद्वचनात् ॥ २५ ॥

रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः ॥
अमृतः शाश्वतस्थाणुर्वरारोहो महातपाः॥ २६ ॥

संहारकाले प्रजाः संहरन्रोदयतीति रुद्रः । रुतं राति ददातीति वा रुद्रः रुदुःखं कारणं वा द्रावयतीति वा रुद्रः ' रुद्रमित्युच्यते तस्माच्छिवं परमकारणम् ' इति लिङ्गपुराणवचनात् । बहूनि शिरांस्यस्येति बहुशिराः ' सहस्रशीर्षा ' इति श्रुतेः । बिभर्ति लोकानिति बभ्रुः । विश्वस्य कारणत्वाद्विश्वयोनिः । शुचीनि श्रवांसि नामानि श्रवणीयान्यस्येति शुचिश्रवाः । न म्रियते मृतं मरणमस्येति अमृतः ' अजरोऽमर ' इति श्रुतेः ॥ शाश्वतश्चासौ स्थाणुश्चेति शाश्वतस्थाणुः । ( १२० ) वर आरोहोऽङ्को यस्येति वरारोहः । वरमारोहणं यस्मिन्निति वा । आरूढानां पुनरावृत्त्यसम्भवात् ' न स पुनरावर्तते ' इति श्रुतेः । ' यं प्राप्य न निवर्तन्ते

तद्धाम परमं मम ' इति भगवद्वचनात् । महत्सृज्यविषयं ज्ञानमस्येति महातपाः ॥ २६ ॥

**सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः ॥**
**वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित्कविः ॥२७॥**

सर्वत्र गच्छतीति सर्वगः । कारणत्वेन व्याप्तत्वात् । सर्वत्र सर्वं वेत्ति विन्दतीति वा सर्ववित् । भातीति भानुः । ' तमेव भान्तमनुभाति सर्वम् ' इति श्रुतेः ' यदादित्यगतं तेज ' इत्यादि स्मृतेश्च । सर्वविच्चासौ भानुश्च सर्वविद्भानुः । विष्वगव्ययं सर्व इत्यर्थे । विष्वगञ्चते पलायन्ते दैत्यसेना यस्य रणोद्योगमात्रेणेति विष्णक्सेनः । जनानर्दयति हिनस्ति नरकादीन्गमयतीति वा जनैः पुरुषार्थमभ्युदयनिःश्रेयसलक्षणं याच्यत इति जनार्दनः । वेदयतीति वेदः । ' तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ' इति भगद्वचनात् । सर्वे वेदाः सर्वविद्याः सशास्त्राः सर्वे यज्ञाः सर्व इज्यश्च कृष्णः । विदुः कृष्णं ब्राह्मणास्तत्त्वतो ये तेषां राजन्सर्वयज्ञाः समाप्ताः ॥ ' इति महाभारते । वेदं वित्ते इति वेदवित् । अव्यङ्गो ज्ञानादिभिः परिपूर्णोऽविकल इत्युच्यते । व्यङ्गो व्यक्तिर्न विद्यत इत्यव्यङ्गो वा ' अव्यक्तोऽयम् ' इति भगवद्वचनात् । वेदा अङ्गभूता यस्य स वेदाङ्गः । ( १३० ) वेदान्विचारयतीति वेदवित् । क्रान्तदर्शी कविः सर्वदृक् ' नान्यतोऽस्ति द्रष्टा' इति श्रुतेः । ' कविर्मनीषी ' इति मन्त्रवर्णात् ।

**लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः ॥**
**चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥ २८ ॥**

लोकानध्यक्षयतीति लोकाध्यक्षः । सर्वेषां लोकानां प्राधान्येनोपद्रष्टा । लोकपालादिसुराणामध्यक्षः सुराध्यक्षः । धर्माधर्मौ साक्षादीक्षतेऽनुरूपं फलं दातुं तस्माद्धर्माध्यक्षः । कृतश्च कार्यरूपेण अ-

कृतश्च कारणरूपेणेति कृताकृतः । सर्गादिषु पृथक् पृथग्विभूतयश्चतस्रः सन्त्यस्येति चतुरात्मा ' ब्रह्मदक्षादयः कालस्तथैवाखिलजन्तवः॥ विभूतयो हरेरेता जगतः सृष्टिहेतवः । विष्णुर्मन्वादयः कालः सर्वभूतानि च द्विज ॥ स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः ॥ रुद्रः कालोऽन्तकाद्याश्च समस्ताश्चैव जन्तवः । चतुर्धा प्रलयायैता जनार्दनविभूतयः ॥ ' इति विष्णुपुराणे । ' व्यूह्यात्मानं चतुर्धा वै वासुदेवादिमूर्तिभिः ॥ सृष्ट्यादीन्प्रकरोत्येष विश्रुतात्मा जनार्दनः ॥ ' इति व्यासवचनाच्चतुर्व्यूहः । दंष्ट्राश्चतस्रोऽस्येति चतुर्दंष्ट्रो नृसिंहविग्रहः । यद्वा सादृश्याच्छृङ्गदंष्ट्रेत्युच्यते ' चत्वारि शृङ्गा " इति श्रुतेः । चत्वारो भुजा अस्येति चतुर्भुजः ॥ (४०) ॥ २८ ॥

भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः ॥
अनघो विजया जेता विश्वयोनिः पुनर्वसुः॥२९॥

प्रकाशैकरसत्वाद्भ्राजिष्णुः । भोज्यरूपतया प्रकृतिर्माया भोजनमुच्यते । पुरुषरूपेण तां भुनक्तीति भोक्ता । हिरण्याक्षादीन्सहते अभिभवतीति सहिष्णुः । हिरण्यगर्भरूपेण जगदादावुत्पद्यते स्वयमिति जगदादिजः । न विद्यतेऽघमस्येति अनघः ' अपहतपाप्मा ' इति श्रुतेः । विजयते ज्ञानवैराग्यैश्वर्यादिभिर्गुणैर्विश्वमिति विजयः । यतो जयत्यतिशयेन स्वभावतोऽतो जेता । विश्वश्चासौ योनिश्चेति विश्वयोनिः । पुनः पुनः शरीरेषु वसति क्षेत्रज्ञरूपेणेति पुनर्वसुः ॥ २९ ॥

उपेंद्रो वामनः प्रांशुरमोघः शुचिरूर्जितः ॥
अतीन्द्रः संग्रहः सर्गो धृतात्मा नियमो यमः॥३०

ईंद्रमुपगतोऽनुजत्वेनेत्युपेन्द्रः । यद्वा उपरि इन्द्र उपेन्द्रः ' ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः ॥ उपेन्द्र इति कृष्ण त्वां गास्यन्ति भुवि देवताः ॥ ' इति हरिवंशे । बलिं वामनरूपेण

याचितत्रानिति वामनः । संभजनीय इति वा ' मध्ये वामनमासीनं विश्वेदेवा उपासते ' इति मन्त्रवर्णात् । स एव जगत्रयं क्रममाणः प्रांशुरभूदिति प्रांशुः । ' तोये तु पतिते हस्ते वामनोऽभूदवामनः ॥ सर्वदेवमयं रूपं दर्शयामास वै प्रभुः ॥ ' भूः पादौ द्यौः शिरश्चास्य चन्द्रादित्यौ च चक्षुषी ॥ ' इत्यादि विश्वरूपं दर्शयित्वा ' तस्य विक्रमतो भूमिं चन्द्रादित्यौ स्तनान्तरे ॥ नभः प्रक्रममाणस्य नाभ्यान्तौ समवस्थितौ ॥ ' इति प्रांशुत्वं दर्शयति हरिवंशे । न मोघं चेष्टितं यस्य सोऽमोघः । स्मरतां स्तुवतामर्चयतां च पावनत्वाच्छुचिः ' अस्य स्पर्शश्च महाञ्शुचिः ' इति मन्त्रवर्णात् । बलप्रकर्षशालित्वादूर्जितः । अतीत्येन्द्रं स्थितो ज्ञानैश्वर्यादिभिः स्वभावसिद्धैरित्यतीन्द्रः । सर्वेषां प्रकृतिसंग्रहात्संग्रहः । सृज्यरूपत्वात्सर्गहेतुत्वाद्वा सर्गः । एकरूपेण जन्मादिरहिततया धृत आत्मा येन स धृतात्मा । ( १६० ) स्वेषु स्वेष्वधिकारेषु प्रजा नियमयन्तीति नियमः । अन्तर्यच्छतीति यमः ॥ ३० ॥

**वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः ॥**
**अतीन्द्रियो महामायो महोत्साहो महाबलः ॥३१॥**

निःश्रेयसार्थिभिर्वेदनार्हत्वाद्वेद्यः । सर्वविद्यानां वेदितृत्वाद्वैद्यः । सदा आविर्भूतस्वरूपत्वात्सदायोगी । धर्मत्राणाय वीरानसुरान्हन्तीति वीरहा । माया विद्यायाः पतिर्माधवः ' मा विद्या च हरेः प्रोक्ता तस्या ईशो यतो भवान् ॥ तस्मान्माधवनामासि धवः स्वामीति शब्दितः ॥ ' इति हरिवंशे । यथा मधु परां प्रीतिमुत्पादयति अयमपि तथेति मधुः । शब्दादिरहितत्वादिन्द्रियाणामविषय इत्यतीन्द्रियः ' अशब्दमस्पर्शम् ' इति श्रुतेः । मायाविनामपि मायाकारित्वान्महामायः ' मम माया दुरत्यया ' इति भगवद्वचनात् ( १७० ) जगदुत्पत्तिस्थितिलयार्थमुद्युक्तत्वान्महोत्साहः । बलिनामपि बलवत्त्वान्महाबलः ॥ ३१ ॥

**महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः ॥**
**अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक्॥३२॥**

बुद्धिमतामपि बुद्धिमत्त्वान्महाबुद्धिः । महदुत्पत्तिकारणमविद्यालक्षणं वीर्यमस्येति महावीर्यः। महती शक्तिः सामर्थ्यमस्येतिमहाशक्तिः महती द्युतिर्बाह्याभ्यन्तरा वास्येति महाद्युतिः ' स्वयंज्योतिश्च ' इति श्रुतेः । ' ज्योतिषां ज्योतिः ' इत्यादेश्च । इदं तदिति निर्देष्टुं यन्न शक्यते परस्मै असंवेद्यत्वात्तदनिर्देश्यं वपुरस्येतिअनिर्देश्यवपुः। ऐश्वर्यलक्षणा समग्रा श्रीर्यस्य स श्रीमान् । सर्वैः प्राणिभिरमेया बुद्धिरात्मा यस्य सोऽमेयात्मा । महान्तमद्रिं गिरिं मन्दरं गोवर्द्धनं च अमृतमथने गोरक्षणे च धृतवानिति महाद्रिधृक् । पान्तोऽयम् । ( १८० ) ॥ ३२ ॥

**महेष्वासो महीभर्ता श्रीनिवासः सतां गतिः ॥**
**अनिरुद्धः सुरानन्दो गोविन्दो गोविदां पतिः३३**

महानिष्वास इषुक्षेपो यस्य स महेष्वासः । एकार्णवे प्लुतां महीं च बभारेति महीभर्ता । यस्य वक्षस्यनपायिनी श्रीर्वसति स श्रीनिवासः । सतां वैदिकानां पुरुषार्थसाधनहेतुः सतां गतिः । न केनापि प्रादुर्भावेषु निरुद्ध इत्यनिरुद्धः। सुरानानन्दयतीतिसुरानन्दः। ' नष्टां वै धरणीं पूर्वमविन्दं वै गुहागताम् ॥ गोविन्द इति तेनाहं देवैर्वाग्भिरभिष्टुतः॥' इति मोक्षधर्मवचनाद्गोविन्दः। 'अहं किलेन्द्रो देवानां त्वं गवामिन्द्रतां गतः ॥ गोविन्द इति लोकास्त्वां स्तोष्यन्ति भुवि शाश्वतम् ॥ ' ' गौरेषा भवतो वाणी तां च विन्दयते भवान् ॥ गोविन्दस्तु ततो देवमुनिभिः कथ्यते भवान् ॥ ' इति च हरिवंशे । गावो वाणी तां विन्दन्तीति गोविदः तेषां पतिर्विशेषेणेति गोविदांपतिः ॥ ३३ ॥

मरीचिर्दमनो हंसः सुवर्णो भुजगोत्तमः ॥ हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ॥ ३४ ॥

तेजस्विनामपि तेजस्वित्वान्मरीचिः । 'तेजस्तेजस्विनामहम्' इति भगवद्वचनात् । स्वाधिकारात्प्रमाद्यन्तीः प्रजा दमयितुं शीलमस्य वैवस्वतादिरूपेणेति दमनः ( १९० ) 'अहं स' इति तादात्म्यभावितः संसारभयं हन्तीति हंसः । पृषोदरादित्वाच्छब्दसाधुत्वम् । हन्ति गच्छति सर्वशरीरेष्विति वा हंसः 'हंस शुचिषत्' इति मन्त्रवर्णात् । शोभनधर्माधर्मरूपपर्णत्वात्सुपर्णः 'द्वासुपर्णा' इति मन्त्रावर्णात् । शोभनं पर्णं यस्येति वा सुपर्णः । 'सुपर्णः पततामस्मि' इति भगवद्वचनात् । भुजेन गच्छतामुत्तमो भुजगोत्तमः । हिरण्यमिव कल्याणा नाभिरस्येति हिरण्यनाभः । बदरिकाश्रमे नरनारायणरूपेण शोभनं तपश्चरतीति सुतपाः 'मनसश्चेन्द्रियाणांच ह्येकाग्र्यं परमं तप' इति स्मृतेः । पद्ममिव सुवर्तुला नाभिरस्येति । हृदयपद्मस्य नाभौ मध्ये प्रकाशनाद्वा पद्मनाभः । पृषोदरत्वात्साधुत्वम् । प्रजानां पतिः प्रजापतिः ॥ ३४ ॥

अमृत्युः सर्वदृक्सिंहः सन्धाता सन्धिमान्स्थिरः॥ अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा॥३५॥

मृत्युर्विनाशस्तद्धेतुर्वा यस्य न विद्यत इत्यमृत्युः । प्राणिनां कृताकृतं सर्वं पश्यति स्वाभाविकेन बोधेनेति सर्वदृक् । हिनस्तीति सिंहः पृषोदरादित्वात्साधुत्वम् । ( २०० ) इति नाम्नां द्वितीयं शतं विवृतम् । वृषाकपिः, पुण्डरीकाक्षो, वरारोहो, वेदविद् । भ्राजिष्णु, रुपेन्द्रो, नियमो, महोत्साहो, महेष्वासो, हंसः । कर्मफलैः पुरुषान्सन्धत्त इति सन्धाता । फलभोक्ता च स एवेति सन्धिमान् । सदैकरूपत्वात्स्थिरः । अजति गच्छति क्षिपति इति वा अजः । मर्षितुं सोढुं दानवादिभिर्न शक्यत इति दुर्मर्षणः । श्रुतिस्मृत्यादिभिः सर्वेषामनुशिष्टिं करोतीति शास्ता । विशेषेण श्रुतो येन सत्य-

ज्ञानादिलक्ष भात्माऽतो विश्रुतात्मा । सुरारीणां निहन्तृत्वात्सुरारिहा । ९ ॥

गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः ॥
निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः ॥३६॥

सर्वविद्यानामुपदेष्टृत्वात्सर्वेषां जनकत्वाद्वा गुरुः । विरिंच्यादीनामपि ब्रह्मविद्यासंप्रदायकत्वाद्गुरुतमः 'यो ब्रह्माणम्' इति मन्त्रवर्णात् । ( २१० ) धाम ज्योतिः 'नारायणः परो ज्योतिः' इति मंत्रवर्णात् । सर्वकामानास्पदत्वाद्वा धाम 'परं ब्रह्म परं धाम' इति श्रुतेः । सत्यलक्षणधर्मरूपत्वात्सत्यः 'तस्मात्सत्यं परमं वदन्ति' इति श्रुतेः । सत्यस्य सत्यमिति वा सत्यः 'प्राणा वै सत्यं तेषां वै सत्यम्' इति श्रुतेः । सत्यः अवितथः पराक्रमो यस्य स सत्यपराक्रमः । निमीलिते यतो नेत्रे योगनिद्रयातो निमिषः । नित्यप्रबुद्धस्वरूपत्वादनिमिषः । मत्स्यरूपतया वा आत्मरूपतया वा अनिमिषः ॥ भूततन्मात्ररूपां वैजयन्त्याख्यां स्रजं नित्यं बिभर्तीति स्रग्वी । वाचो विद्यायाः पतिर्वाचस्पतिः । सर्वार्थविषया धीर्बुद्धिरस्येत्युदारधीरीति पदद्वयमेकं नाम ॥ ३६ ॥

अग्रणीर्ग्रामणीः श्रीमान्न्यायो नेता समीरणः ॥
सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात्॥३७॥

अग्रं विप्रकृष्टं पदं नयति मुमुक्षुमित्यग्रणीः । भूतग्रामस्य नेतृत्वाद्ग्रामणीः । श्रीः कान्तिः सर्वातिशायिनी अस्येति श्रीमान् ( २१० ) प्रमाणानुग्राहको भेदकरस्तर्को न्यायः । जगद्यन्त्रनिर्वाहको नेता । श्वसनरूपेण भूतानि चेष्टयतीति समीरणः । सहस्राणि मूर्द्धानो अस्येति सहस्रमूर्द्धा । विश्वस्य आत्मा विश्वात्मा । सहस्राण्यक्षीण्यक्षाणी वा यस्य सहस्राक्षः । सहस्राणि पादा अस्येति सहस्रपात् 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' इति श्रुतेः ॥ ३७ ॥

